## तिरुमलक्षेत्रे स्वामिनः आलये आचरितज्येष्ठाभिषेकदृश्यानि
## (२०२१, जून् २२ तः २४ पर्यन्तम्)



## गीतामृतम्



सञ्जय उवाच-

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति।।

(भगवद्गीता २५/१)

गाङ्गेयद्रोणयोः बलेन तयोः पुरतः ये प्रजानां पालनेन निवसन्ति च महीपालाः तेषां पुरतः स्वस्य उत्तमं रथं स्थापयित्वा अर्जुनं प्रति श्रीकृष्णः वदति यत् पार्थ! (पृथायाः पुत्र) युद्धार्थम् अत्र समवेतान् कुरुवंश्यान् पश्य इति।

## सङ्कीर्तनम्

रागम् - बेहाग्।
ताळम् - आदिताळम्।

नारायण ते नमो नमो
नारदसन्नुत नमो नमो।।प।।

मुरहर भवहर मुकुन्द माधव
गरुडगमन पङ्कजनाभ।
परमपुरुष भवबन्धविमोचन
नरमृगशरीर नमो नमो।।च।।

जलधिशयन रविचन्द्रविलोचन
जलरुहभवनुतचरणयुग।
बलिबन्धन गोपवधूवल्लभ
नलिनोदर ते नमो नमो।।च।।

आदिदेव सकलागमपूजित
यादवकुलमोहनरूप
वेदोद्धर श्रीवेङ्कटनायक
नादप्रिय ते नमो नमो।।च।।

(अन्नमाचार्यसङ्कीर्तनम्)



# संस्कृतिः

भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा इत्युक्त्यनुगुणं चिन्तयामो यदि तर्हि अवगम्यते यत् भारतस्य गर्वकारणीभूतौ द्वौ एव संस्कृतभाषा, भारतीयाध्यात्मिकसंस्कारश्च इति।

तत्र संस्कृतम् एका अतिप्राचीना समृद्धा शास्त्रीया च भाषा वर्तते। संस्कृतेतर भारतीयभाषासु बाहुल्येन संस्कृतशब्दा उपयुज्यन्ते। संस्कृतात् एव अधिकाः भारतीय भाषाः उद्भूताः। तावदेव भारत-यूरोपीयभाषावर्गीयाः अनेकाः भाषाः संस्कृतप्रभावं संस्कृतशब्दप्राचुर्यं च प्रदर्शयन्ति।

किञ्च संस्कृतिः नाम शैशवादाजन्म कुत्र कथं वर्तनीयः एकः जनः इत्याकारकविषयः। स च अत्यवश्यं ज्ञातव्यांशः। यथा बालः मातृ-पितृ-ज्येष्ठानां सविधे गुर्वनुजादिसविधे वा भवेत् कथं वा सम्भाषणं कुर्यात् इत्यादिः। समाजे जीवनविधाने प्रमुखविषयाणाम् अर्थात् आचाराः, व्यवहाराः, प्रमाणानि, मतानि, सम्बन्धाः, पालनमित्यादीनां सूचकमस्ति संस्कृतिरिति पदम्। तत्रापि ते विषयाः अहर्निशं विभिन्नाः, परिणताः वा भवन्तीति हेतोः तत्रावधिः नास्त्येव।

एवञ्च कलाः, विश्वासाः, संस्थाः, वैभिन्यम्, वारसत्वविधानानि, आचाराः, पद्धतयः, अभिवादाः, वस्त्रधारणं, भाषाः, क्रीडाः इत्यादिविषयान् भविष्यकालं यावत् या रक्षति सैव संस्कृतिः। तत्रापि भारतीयसंस्कृतिः अत्यन्तम् औन्नत्यं भजते। तत्र कारणं मुख्यमस्ति गुरुशिष्ययोः सम्बन्धः। ''आचार्यवान् पुरुषो वेद'' ''तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'' इत्यादिश्रुतयः आत्मज्ञानार्थं गुरोः आवश्यकतां प्रतिपादयन्ति।

किञ्च - तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनः तत्त्वदर्शिनः॥

इति स्मृतिरपि तत्त्वदर्शिनः गुरोः प्रणिपातादिशिष्यकर्तव्यतां प्रतिपादयति। अतः गुरुरूपपुरुषसहायः तत्त्वज्ञानार्थिनः अत्यावश्यकः इति प्रतिभाति।

पूर्वोक्तं सर्वमपि सम्भवति यदा शिष्यः गुरुमुपगच्छति, वेदादीनध्येति तदा। इदानीन्तनकाले सर्वमपि अधितन्त्रमाध्यमेन (Online) पाठनपठनादिकं चरति चेदपि साक्षात् भवति चेत् अधिकं फलं प्राप्नुमः।

अतः तादृशपरिस्थितिसंरक्षणाय ति.ति.दे.स्वीयेषु वेदविद्यालयादिषु गुरुशिष्यसम्बन्धद्वारा भारतीयसंस्कृतिम् अभिवर्धयितुं ज्ञानधारासारणाय च प्रयतते इत्ययं मुदावहो विषयः। तादृशगुरुं, परमगुरुं श्रीनाथं च उपसङ्गम्य, स्वयं संस्कृतिरक्षणे कटिबद्धा भवेम, गुरुशिष्यसम्बन्धं वर्धय इत्यपि प्रार्थयेम।

वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥



# सप्तगिरिः


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


सूचना
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०४


## जूलै २०२१

श्री प्लवनामसंवत्सरस्य ज्येष्ठकृष्णसप्तमीतः
प्लवनामसंवत्सरस्य आषाढकृष्णसप्तमीपर्यन्तम् - ११४१



मुखचित्रम् - आणिवर आस्थानम्, तिरुमल
अन्तिमरक्षापुटः - श्रीनिवाससाक्षात्कारवैभवम्, श्रीनिवासमङ्गापुरम्


सङ्केतः
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# विष्णुप्रिया तुलसी



- सि.आदिलक्ष्मीः

चरवाणी - ९९४९८७२१४९

भगवतः विष्णोः प्रिया सहचरी च तुलसी भवति। तुलस्याः अपरं नाम वृन्दा। तुलस्याः वनं वृन्दावनमिति कथयन्ति। तुलसी पूजनेन नरः ऐश्वर्यभोगमोक्षं प्राप्नोतीति पुराणवचनम्। सा केशवप्रिया। तस्याः पूजनेन केशवः सन्तुष्टो भवति। अतः सर्वारिष्टशान्त्यर्थं, सर्वमङ्गलप्राप्त्यर्थं तुलसीं भक्ताः षोडशोपचारैः प्रतिदिनं पूजयन्ति।

**ध्यायामि तुलसीं देवीं श्यामां कमललोचनाम्**
**प्रसन्नां पद्मकल्हारवराभयचतुर्भुजाम्।**
**किरीटहारकेयूरकुण्डलादिविभूषिताम्**
**धवलांशुकसंयुक्तां पद्मासननिषेदुषीम्।**

तुलस्याः कोमलैः पत्रैः श्रीहरेः पादपङ्कजपूजनं ये कुर्वन्ति ते कृतार्थाः भवन्ति। तुलसीवने पुष्करतीर्थानि, गङ्गाद्याः सरितः वासुदेवादयो देवाः वसन्ति। तुलसी शोकसन्तापनाशिनी आधिव्याधिहरी च। तुलस्याः रोपणात्पालनात्सेकाद् दर्शनात् पर्शनान्नृणां पापं दहति। सभामध्ये शत्रुपीडने तुलसी स्मरणेन विजयः भवति। तुलसीपत्राणि अत्यन्तपवित्राणि। अस्याः तुलस्याः महिमा चिकित्साक्षेत्रे गरीयसी। तुलसीपत्राणि जले निक्षिप्य तेन जलेन स्नाप्यते, तत्तु अनेकरोगान् नाशयति। सुप्रभातवेलायां प्रथमं तुलसीपत्राणां सेवनं हृदयरोगे लाभकारी भवति। तस्याः पत्राणि पिष्ट्वा जम्बीररसेन सह मुखे लेपनेन वदनस्य कान्तिः वर्धते। मूल-पत्र-वृन्त-पुष्प-बीजैः निर्मितेन तुलस्याः पञ्चाङ्गेन वातरोगस्य सन्धिपीडा नष्टीभवति। उक्तं च -

**या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुः पावनी**
**रोगाणामभिवन्दिता निरसनी सिक्तान्तकत्रासिनी।**
**प्रत्यासक्तिविधायिनी भगवतः कृष्णस्य संरोपिता**
**न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः।।**

तुलसीगायत्रीमन्त्रपठनेन सर्वसम्पदः वशीभवन्ति आरोग्यम् आनन्दश्च। अतः वैष्णवभक्ताः सुप्रभातसमये तुलसीगायत्रीमन्त्रं पठन्ति।

श्री तुलसी गायत्रीमन्त्रः यथा -

**''ओं त्रिपुराय विद्महे तुलसीपत्राय धीमहि**
**तन्नो तुलसी प्रचोदयात्।।** इति।

धात्रीफलेन यत् पुण्यं, यत्फलं प्रयागस्नानेन काश्यां प्राणविमोचनेन यत् फलं शालग्रामशिलार्चने यत्फलं तावत्फलं तुलसी पूजनेनैव नरः प्राप्नोतीति पुराणवचनम्'' रोपिता,

सिक्ता, दृष्टा, स्पृष्टा च प्रयत्नेन सर्वलोकफलप्रदा तुलसी विष्णुलोकसायुज्यं नराय ददाति। तुलस्यालङ्कृताः ये तुलसीवनपूजकाः तुलसीस्थापकाः यमकिङ्करैः त्याज्याः। तुलसीकानने मूहुर्तमपि यस्तु विश्रमेत् जन्मकोटिकृतात् पापात् नरः मुच्यते। तत्र न संशयः। तुलसीं प्रतिदिनं ये भक्त्या भ्रमित्वा नमस्कुर्वन्ति न तेषां दुरितं कश्चिदक्षीणमवशिष्यते। सर्पपापहरं, सर्वकामदं तुलसीवनं समं नरः अन्यत्र न पश्यति। अतः तुलसीपादपः गृहे अवश्यं स्थापनीयः।

**अनन्यमनसा नित्यं तुलसीं स्तौति यो जनः।**
**पितृदेवमनुष्याणां प्रियो भवति सर्वदा।।**

तुलस्याः नापरं किञ्चिदैवतं जगतीतले नास्ति। तुलस्यां सकलाः देवाः वसन्ति। तुलसी पत्राणि देवपूजायां, श्राद्धकर्मणि अत्यावश्यकानि भवन्ति। तुलसीपत्रैः पूजनेन कानि नित्यपूजायां यज्ञसमफलं मानवः प्राप्नोति। अतः तुलसीपत्राणि अपचयनसमये त्रीणि मन्त्राणि पठनीयानि।

१. ओं सुभद्रायै नमः
२. ॐ सुप्रभायै नमः
३. मातस्तुलसि गोविन्दहृदयानन्दकारिणि।
नारायणस्य पूजार्थं चिनोमि त्वां नमोस्तुते।।

अनन्तरं प्रातः तुलसीपूजां वैष्णवभक्ताः इत्थं कुर्वन्ति -

**जगद्धात्रिनमस्तुभ्यं विष्णोश्च प्रियवल्लभे।**
**यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः।**
**नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे**
**नमो मोक्षप्रदे देवि नमः सम्पत्प्रदायिके।।**

येषां गृहे तुलसीपादपः गृहाङ्गणे विराजते, तेषां मृत्युभीतिर्न भवति। पद्मपुराणानुसारं तुलसीनामोच्चारणमात्रेणैव विष्णुः प्रीतो भवति। विश्वपूजिता, विश्वपावनी, वृन्दावनी, नन्दिनी, वृन्दा, पुष्पसारा इत्यादीनि तुलस्याः नामान्तराणि सन्ति।

वैष्णवभक्ताः अद्यापि श्रद्धापूर्वकं तुलसीकाष्ठं मालारूपेण कण्ठे धरन्ति। तुलसीपत्रदानेन सप्तद्वीपवतीं पृथ्वीं दत्वा यत्फलमाप्नुयात् नरः तत्फलं समवाप्नोति। अतः भक्ताः लोकपूज्यां केशवप्रियां तुलसीं इत्थं स्तुवन्ति-



**तुलसी श्रीमहालक्ष्मीर्विद्याविद्या यशस्विनी।**
**धर्म्या धर्मानना देवी देवीदेवमनःप्रिया।**
**लभते सुतरां भक्तिम्.... पद्मिनी श्रीहरिप्रिया।। इति।**

तुलस्याः जननं कार्तिकपूर्णिमायां जातमिति पुराण - वचनम्। अतः कार्तिकमासे विष्णोः पूजा तुलसीपत्रैः क्रियते चेत् सहस्रगोदानफलं नरः प्राप्नोति। प्रप्रथमं श्रीहरिः तुलस्याः पूजनं कृतवान्। अतः तुलसीपूजनेन श्रीहरिः परमप्रीतिं प्राप्नोति। तुलसी लोकजननी च। अपुत्रः पुत्रं प्राप्नोति रोगी रोगात् प्रमुच्यते तुलसीस्तोत्रपठनेन।

उक्तं च फलश्रुत्यां -

**अपुत्रो लभते पुत्रं ..... स्तोत्रस्मरणमात्रतः।**
**रोगी प्रमुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।**
**भयान्मुच्येत भीतस्तु पापान्मुच्येत पातकी।।**

इत्थं फलश्रुतिः ब्रह्मवैवर्तपुराणे तुलसीपूजनविधिसहितं वर्णिता अस्ति। वयं अतः तुलसीं विष्णुप्रियां प्रतिदिनं अर्चयामः।

किञ्च तुलस्याः माहात्म्यं श्रीकृष्णतुलाभारसन्दर्भेणापि वयं ज्ञातुं प्रभवामः। अतः अत्यन्तप्रियायाः तुलस्याः पूजनेन तत्प्रियः श्रीकृष्णः अस्मासु प्रीयतामिति आशास्महे।





# श्रीक्षेत्रे श्रीजगन्नाथरथोत्सवः

- डॉ. सोमनाथदाशः
चरवाणी - ८२४७६७८५४८

नीलाद्रौ शङ्खमध्ये .....ब्रह्मदारुं स्मरामि।। - यात्राभागवते

अखिलाण्डकोटिब्रह्माण्डनायकस्य चतुर्षु धामसु भारतवर्षस्य पूर्वस्यां दिशि वङ्गोपसागरवेलाभूमौ विराजितं नीलाद्रिशिखरशेखरस्य जगतो नाथस्य श्रीश्रीजगन्नाथस्य पुण्यक्षेत्रं, श्रीदेव्यधिष्ठितत्वात् श्रीक्षेत्रम्, शङ्खाकृतित्वात् शङ्खक्षेत्रं इति नाम्ना प्रसिद्धं श्रीवैष्णवानां परमाराध्यं तथा उत्कलीयानां हृदयपीठमित्युच्यते। अत्र श्रीमन्दिरे रत्नवेदिकायां साक्षान्नारायणः स्वज्येष्ठभ्रात्रा बलरामेण, भगिन्या सुभद्रया, स्वायुधेन सुदर्शनेन च साकं विराजमानो नित्योत्सवान् विधाय सकलजनमनस्तोषयन् भक्तगणान् शान्तिमैत्रीमुक्तीनां मार्गं प्रदर्शयति। भारतीयज्ञानपरम्परायां सुप्रसिद्धानाम् आगमग्रन्थानां यदि परिशीलनं वयं कुर्मस्तर्हि तत्र सर्वेषामपि आगमानां विषयवस्तु पादचतुष्टयेऽन्तर्भवति। यथा -

१. ज्ञानपादः (दार्शनिकाध्यात्मिकज्ञानप्रतिपादकः)
२. योगपादः (योगमाध्यमेन मानससंयमनविधिप्रतिपादकः)
३. चर्यापादः (मन्दिरनिर्माणार्थं मूर्त्तिनिर्माणार्थं च निर्दिष्टनियमप्रतिपादकः)
४. क्रियापादः (धार्मिकपर्वोत्सवानां नित्यनैमित्तिकपूजोपचाराणां च प्रतिपादकः) इति।

एवमपि प्रामुख्येन नव विषयाः आलयसंस्कृतिसन्दर्भे आगमिकैः सम्भाविताः वर्तन्ते। यथा - १. देवालयकल्पनम् २. विग्रहकल्पनम् ३. प्रतिष्ठा ४. अर्चनम् ५. स्नपनम् (अभिषेकः) ६. उत्सवाः ७. प्रायश्चित्तम् ८. ज्ञानम् ९. चर्या चेति। एतेषु क्रियापादान्तर्गततया पर्यालोचिताः उत्सवाः जनसमूहे अपूर्वं हर्षोल्लासं जनयन्तः विश्वबन्धुत्वम्, आध्यात्मिकवातावरणं पारस्परिकस्नेहभावञ्च जनयन्ति।

परमकारुणिकस्य दारुविग्रहस्य सनातनधर्मध्वजस्तम्भभूतस्य श्रीश्रीजगन्नाथदेवस्यापि श्रीमन्दिरे विधीयमानाः नैके उत्सवाः उल्लेखयोग्या भवन्ति। अत्र दैनिकाः, साप्ताहिकाः, मासिकाः, ऋतुकालिकाः, वार्षिकाश्च बहुविधाः उत्सवाः परिपाल्यन्ते। किन्तु तेषु सर्वेष्वपि उत्सवेषु प्रसिद्धाः द्वादशोत्सवाः ''द्वादशयात्रा'' नाम्ना स्कन्दपुराण-नीलाद्रिमहोदय-वामदेवसंहिता-कपिलसंहिता-यात्राभागवतादिषु ग्रन्थेषु उल्लिखिताः वर्तन्ते। यथोच्यते यात्राभागवते -

दोलायात्रा .... द्वादशैता नरेन्द्र।।

एवमत्र-दोलायात्रा, दमनकयात्रा, अक्षय्यतृतीया, स्नानयात्रा, श्रीगुण्डिचायात्रा, देवशयनम्, उत्तरायणम्, दक्षिणायनम्, पार्श्वपरिवर्तनम्, देवोत्थानम्, प्रावरणषष्ठी, पुष्पपूर्णिमापूजा इत्येताः द्वादशयात्राः भवन्ति। परमपावने पुरुषोत्तमक्षेत्रे वरसुरस्य पुरुषोत्तमस्य श्रीजगन्नाथस्य श्रीगुण्डिचायात्रा सकलासु एतासु यात्रासु वरिष्ठा महामहिमशालिनीति ब्रह्मपुराणे स्पष्टतया उल्लिख्यते। यथा -

गुण्डिचामण्डपं यान्तं ... भवनं हरेः।। इति। - ब्रह्म.पु.२४/१

एषा गुण्डिचायात्रा ''घोषयात्रा'', ''रथयात्रा'', ''जन्मवेदीयात्रा'', ''अन्तर्वेदीयात्रा'', ''दशावतारयात्रा'' ''पतितपावनयात्रा'', ''नवाह्नयात्रा'', ''आडपमण्डपयात्रा'' इत्यप्युच्यते। द्वादशयात्रासु अक्षय्यतृतीया-स्नानयात्रा-रथयात्राख्याः यात्राः पारस्परिकसम्बन्धं स्थापयन्ति। वैशाखमासे शुक्लपक्षे तृतीयातिथिः ''अक्षय्यतृतीया'' इति नाम्ना परिपाल्यते। एष उत्सवः जगद्गुरोः श्रीपुरुषोत्तमस्य

नौकाक्रीडायात्रा इति कथ्यते। तदुच्यते यात्राभागवते -
**वैशाखे च ..... सर्वकामार्थसिद्धये।। - यात्राभागवते- ३/१**

दिवसोऽयमौपचारिकरूपेण सर्वकारीयस्तरे ''कृषकदिवस'' इति कथ्यते। अस्यां तिथौ श्रीविग्रहाणां रथनिर्माणकार्यस्य शुभारम्भो भवति। तन्त्रविध्यनुसारेण महाकालीमन्त्रेण कुठारस्य पूजां कृत्वा तेनैव कुठारेण श्रीमन्दिरपुरोहिताः वनयोगहोमस्यायोजनं कृत्वा रथनिर्माणकार्यस्यारम्भं कुर्वन्ति। श्रीजगन्नाथबलभद्रसुभद्राणां कृते क्रमशः नन्दिघोषः, तालध्वजः, देवदलनम् (दर्पदलनम् / पद्मध्वजः) इति नाम्ना निर्मिताय रथत्रयाय अद्दिष्टमेकं काष्टखण्डमानीय तत्र कुठारस्पर्शः क्रियते। श्रीमन्दिरे मध्याह्नभोगानन्तरं श्रीविग्रहाणाम् आज्ञामाला चन्दनशोभायात्रया साकं रथनिर्माणशालां प्रति आनीयते। एतत्कार्यं श्रीमन्दिरस्य समीपे ''पूजापण्डा'' इति सेवकैः सम्पाद्यते। श्रीजगन्नाथमन्दिरस्य समीपे श्रीगजपतिमहाराजस्य राजप्रासादम् अभितः रथनिर्माणशालायां श्रीमन्दिरपुरोहितः, राजगुरुः, वैदिकब्राह्मणाः मिलित्वा वनयोगपूजां कुर्वन्ति। अस्मिन्नवसरे रूपकार-कुम्भकार-चित्रकार-भोई-अमीनजातीयसेवकाः उपस्थिताः भवन्ति। तत्र विशिष्टरूपेण एकं शिल्पिनं विश्वकर्मारूपेण स्वीकृत्य तस्य शिरसि शाटिकाबन्धननीतिः परिपाल्यते। रथसंहिता, मानसार, शिल्पसारसंग्रह, शिल्पशास्त्रनीत्यनुसारेण रथानि निर्मीयन्ते।अत्र समुदायरूपेण ११३९ संख्याकाः काष्ठखण्डाः उपयुज्यन्ते। तत्र फासी, असन, धठरा, शिमिलि, पालधुआ, महानिम्ब, गम्भारी, मइ, कदम्ब, देवदारु इति वृक्षाणां काष्ठानि ओडिशाराज्यस्य नयागड-खोर्द्धा-दशपल्ला-रणपुरघनारण्येभ्यः समानीयन्ते। श्रीमन्दिरस्य प्रशासनकर्मचारिभिः अस्य कार्यस्य पर्यवेक्षणं क्रियते। अक्षय्यतृतीयायाः एकविंशतिदिनानि यावत् प्रचलितस्य चन्दनयात्रोत्सवस्य अन्तिमदिवसे रथचक्राणि संयोज्यन्ते। एवं रथनिर्माणार्थं विविधाः तिथयः प्रसिद्धाः सन्ति। यथा - श्रीपञ्चम्यां रथकाष्ठसंग्रहणात् प्रारभ्य श्रीमन्दिरमभितः रथानाम् आनयनं यावत्।

अत्र रथानां वैशिष्ट्यं किञ्चित्पर्यालोच्यते। देवाधिदेवः श्रीजगन्नाथो यस्मिन् रथे उपविश्य यात्रां करोति, तस्य रथस्य नाम ''नन्दिघोषः' अथवा ''गरुडध्वज'' इति कथ्यते। अस्मिन् रथे श्रीजगन्नाथेन साकं मदनमोहनः (उत्सवविग्रहः) विराजते। अत्र ७४२ काष्ठखण्डानि योज्यन्ते। अस्य उच्चता ४५ ft. 6 inch भवति। अत्र १६ चक्राणि (विष्णुसिद्धः, विभूतिः, अणिमा, प्रज्ञा, धीः, ज्ञानम्, प्रेम, आशक्तः, रतिः, केलिः, सत्यम्, स्वस्तिः, जागृतिः, तुरीयः, आमः, निर्वाणः) संयुक्तानि भवन्ति। प्रत्येकं चक्रस्य उच्चता ६. भवति। अस्य रथस्य सारथिः ''मातली'', रथरज्जुः ''शङ्खचूडः'', चत्वारः श्वेतघोटकाः (शङ्ख-बलाहक-श्वेत-हरिद्वाशाः), पताका ''गरुडचिह्नाङ्किता'', ध्वजमूर्त्तिः ''हनुमान्'', वस्त्राणि रक्तपीतवर्णानि च भवन्ति। अत्र नव पार्श्वदेवताः स्थाप्यन्ते। यथा हरिहरः, पण्डुनृसिंहः, गिरिधरः, षड्भुजचिन्तामणिकृष्णः, चतुर्भुजनारायणः, सप्तफणसर्पासीनः मधुसूदनः, लक्ष्मणः, पञ्चमुखी महावीरश्च। श्रीजगन्नाथस्य ज्येष्ठभ्राता यस्मिन् रथे उपविश्य यात्रां सम्पादयति, तस्य रथस्य नाम ''तालध्वजः'' अथवा ''लङ्गलध्वजः'' इति कथ्यते। अनेन सह रामकृष्णः रथे विराजते। अस्य काष्ठसंख्या ७३१, उच्चता ४५ft. चक्रसंख्या चतुर्दश, दधिभाण्डं ''हिरण्मयि'', सारथिः ''दारुकः'', रथरज्जुः ''वासुकी'', चत्वारः कृष्णघोटकाः (तीव्रघोर-दीर्घश्रम-स्वर्णनाभाख्याः/स्थिर-धृति-स्थिति-प्रज्ञाख्याः/शङ्ख-सुचित्र- अङ्गद-मेघनादाख्याः), ध्वजमूर्तिः ''लक्ष्मीनृसिंहः'', वस्त्राणि रक्तहरितवर्णयुक्तानि च भवन्ति। अस्मिन् रथे विराजमानाः नव पार्श्वदेवताः यथा - महादेवः, द्वाविंशतिभुजविशिष्टनृसिंहः, बलरामः, नृत्यगणपतिः, लक्ष्मणवाही अङ्गदः, नटाम्बरः (वृषभोपरिनृत्यरतः शिवः), कार्तिकेश्वरः, मधुकैटभाभ्यां सह युद्धरतो विष्णुः, अनन्तवासुदेवश्च।

महादेव्याः सुभद्रायाः रथस्य नाम ''दर्पदलनम्'', ''पद्मध्वजम्'' ''देवदलनम्'' वा भवति। अत्र सुभद्रया सह श्रीविष्णोः आयुधं सुदर्शनं विराजते। अस्य काष्ठसंख्या ७११, उच्चता ४४ ft. ६. inch, चक्रसंख्या द्वादश, सारथिः ''अर्जुनः'', रथरज्जुः ''स्वर्णचूडः'', ध्वजमूर्तिः ''जयदुर्गा'', चत्वारः घोटकाः (रोचिका, मोचिका, जिता, अपरजिता च), वस्त्राणि रक्त-कृष्णवर्णयुक्तानि च भवन्ति। एवं रथेऽस्मिन् पार्श्वदेवरूपेण विमला, वाराही, भद्रकाली (शवारूढा

चतुर्भुजा), वनदुर्गा, कात्यायनी (अष्टभुजा दुर्गा), हरचण्डी, रामचण्डी (अष्टभुजयुक्ता) अघोरा च विराजन्ते।

श्रीजगन्नाथस्य षोडश चक्राणि षोडशकलायाः, बलभद्रस्य चतुर्दशचक्राणि चतुर्दशमन्वराणाम्, सुभद्रायाश्च द्वादशचक्राणि द्वादशमासानां प्रतीकभूताः भवन्ति। एतादृशेषु त्रिविधेषु रथेषु उपविश्य श्रीजगन्नाथबलभद्रसुभद्राः श्रीगुण्डिचामन्दिरं प्रति गच्छन्ति। श्रीगुण्डिचायात्रायाः पूर्वं विशिष्टः कश्चन उत्सवो भवति यः स्नानयात्रा इति कथ्यते। एषा यात्रा ज्येष्ठशुक्लपौर्णम्यां योज्यते। अस्मिन् श्रीविग्रहाणां रत्नवेदीकायाः ''स्नानमण्डपं प्रति समानयनं भवति। तत्र श्रीजगन्नाथ-बलभद्र-सुभद्रा-सुदर्शनानां चतुर्णां विग्रहणां विधिपूर्वकं तीर्थोदकैः स्नानं कार्यते। तदुच्यते यात्राभागवते -

**ज्येष्ठे मासि ... सर्वमङ्गलसिद्धये।।** - यात्रा.भा.-४/१

उत्सवोऽयं ''देवस्नानपूर्णिमा'', ''मञ्चस्नानोत्सवः'', ''पतितपावनलीला'' इत्यादिभिः नामभिः लोके प्रचलति। महाप्रभोः आविर्भावकाले सर्वादौ स्नानविधिः समायोजिताऽऽसीदिति हेतोः अयमुत्सवः श्रीदारुविग्रहस्य आद्यलीलारूपेण परिगण्यते। महाप्रभोः दारुविग्रहरूपधारणादनन्तरं सर्वादौ मङ्गलमयमुहूर्ते एषा स्नानलीला महाराजेन इन्द्रद्युम्नेन समायोजिताऽऽसीत्। तदा स्नानमण्डपाभावात् काष्ठमञ्चं निर्माय अयमुत्सवः आयोजित इति हेतोः उत्सवस्यास्य नाम 'मञ्चस्नानोत्सव' इति कथ्यते। शास्त्रीयविध्यनुगुणम् अष्टाधिकैकशतस्वर्णकलशेषु अभिमन्त्रितं जलमानीय दारुब्रह्मणः आद्यस्नानलीला सम्पाद्यते। स्नानान्तरं श्रीविग्रहाणां ''गजवेशः'' कार्यते। उत्सवसमाप्तौ सर्वेऽपि श्रीविग्रहाः पुनः रत्नवेदिकां प्रत्यानीयन्ते। एतदनन्तरं महाप्रभुः भ्रात्रा, भगिन्या च साकं ज्वरग्रस्तो भवति। स्नानोत्सवात् प्रारभ्य नेत्रोत्सवं यावत् पञ्चदशदिनानि अनवसरगेहे विग्रहाः स्थाप्यन्ते। एतेषु विदसेषु भक्ताः श्रीविग्रहाणां दर्शनं न प्राप्नुवन्ति।

श्रीजगन्नाथस्य अनवसरगृहात् वहिराग मनादनन्तरं श्रीमन्दिरे प्रसिद्धं नीतिद्वयं परिपाल्यते। यथा-''नेत्रोत्सवः'' ''नवयौवनदर्शनम्'' च। सर्वादौ अनवसरात्परं नवयौवनदर्शनं भवति ततः नेत्रोत्सवस्यायोजनं क्रियते। उक्तं च यात्राभागवते-

**स्नानान्ते षोडशदिने ... दर्शनमाचरेत्।।** - यात्राभागवते५/१

नेत्रोत्सवे पूजापण्डा (सेवकविशेषः) आज्ञामालां स्वीकृत्य घण्टा-मृदङ्ग-ताल-काहालध्वनिभिः जयविजयद्वारदेशेन सिंहद्वारमतिक्रम्य श्रीराजप्रासादम् अभितः रथनिर्माणशालायां गच्छति। तत्र च प्रत्येकस्मिन् स्यन्दने मालां बध्नाति। तदनन्तरं तानि स्यन्दनानि रथनिर्माणशालातः सिंहद्वारस्य समीपे आनीयन्ते।

नेत्रोत्सवादनन्तरम् आषढमासस्य शुक्लपक्षद्वितीयायां तिथौ श्रीगुण्डिचायात्रा समायोज्यते। तदुच्यते वामदेवसंहितायाम्-

**द्वितीयायां तिथौ....स्नानादिकं चरेत्।।**- वा.सं.-१५/५६-५७

नीलाद्रिमहोदयेऽपि तथैव विधानं प्रस्तुतमस्ति। यथा -

**आषाढस्य च ... हरेः प्रभोः।।** - नी.म.-१६/४-६

यात्राभागवतेऽपि पद्मपुराण-विष्णुधर्मोत्तरपुराणादिभ्यः प्रमाणानि स्वीकृत्य घोषयात्रायाः तिथिविषये स्पष्टोल्लेखः प्राप्यते। (यात्राभागवते-पञ्चमाध्याये) यथा -

**आषाढस्य सिते .... भवति ध्रुवम्।।**

तत्र तिथिनिर्णयमाह पाद्मे व्यासोक्तौ -

**तृतीयया युता कार्या प्रतिपत्संयुता न तु।।**

इति वचनात् द्वितीया परविद्धा ग्राह्या। विष्णुपुराणे, विष्णुधर्मोत्तरे माधवीये च -

**एकादश्यष्टमी षष्ठी ... परान्विताः।।**

इति वचनात् श्रीगुण्डिचाविहितद्वितीयोपवासे परविद्धा तिथिर्ग्राह्या न तु पूर्वविद्धा।

**परविद्धा द्वितीया .... यात्रायां जगदीशितुः।।**

इति वचनात् गुण्डिचायात्रायां द्वितीया परविद्धा ग्राह्या।

**उदये प्रतिपत् .... कदापि न।।**

इति वचनात् द्वितीयाक्षयदिवसे श्रीगुण्डिचा कार्या। वृद्धिः स्याच्चेत्-

**वृद्धौ सत्यां .... यतस्तिथिमलो भवेत्।।**

इति वचनाद् द्वितीयावृद्धिश्चेत् षष्टिदण्डात्मिका या पूर्णा तिथिस्तस्यां श्रीगुण्डिचा कार्या।

(अनुवर्तते)







तिरुचानूरु आलये श्रीसुन्दरराजस्वामिनः आचरितावतारोत्सवः
(२९-०६-२०२१ तः ०१-०७-२०२१ पर्यन्तम्)



तिरुपति कपिलेश्वरस्वामिनः सन्निधौ आचरितः पत्रपुष्पयागः
(२६-०५-२०२१)

# तिरुमलक्षेत्रे श्रीस्वामिनः आलये आचरिष्यमाणपवित्रोत्सवाः
## (२०२१, आगस्ट् १७ तः २० पर्यन्तम्)






जम्मूनगरे १३-०६-२०२१ दिने सवैभवम् आचरिते श्रीस्वामिनः आलयनिर्माणारम्भोत्सवे लेफ्टेनिंग् गवर्नर् मनोज् सिन्हा, मन्त्रिणः जि.किषन् रेड्डि, जितेन्द्र सिंग्, ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।। के.यस्.जवहर् रेड्डि, ऐ.ए.एस्., तथा इतरप्रत्येकाधिकारिणश्च।




२४-०६-२०२१ दिनाङ्के स्पेसिफैड् अथारिटी चैर्मन् रूपेण नियमितेभ्यः ति.ति.दे. कार्यनिर्वहणाधिकारिभ्यः डा।। के.यस्.जवहर् रेड्डि, ऐ.ए.एस्. महोदयेभ्यः स्वामिनः प्रसादसमर्पकाः अतिरिक्तकार्यनिर्वहणाधिकारिणः तथा स्पेसिफैड् अथारिटी कन्वीनर् श्री ए.वि.धर्मारेड्डि ऐ.डि.इ.एस्. तथा तिरुपति संयुक्तकार्यनिर्वहणाधिकारिण्यः श्रीमती सदा भार्गवी ऐ.ए.एस्. महाभागाः च।




३०-०६-२०२१ दिनाङ्के श्रीवेङ्कटेश्वर गोसंरक्षणशालायाः तथा तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालये तालपत्रग्रन्थानां परिशीलने ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।।के.यस्.जवहर् रेड्डि, ऐ.ए.एस्. महाभागाः तथा इतरोन्नताधिकारिणश्च।



भागः - ४

# भगवद्गीता

तेलुगुमूलम् -
श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः -
विद्वान् श्रीकान्ताचार्यः
चरवाणी - ६३६०६९३९९०

सञ्जयः पूर्वोक्तधृतराष्ट्रप्रश्नेषु तृतीयम् उत्तरयति ''राजा वचनमब्रवीत्'' इति। आजीवनमपि दुर्योधनं राजानं कर्तुं परितपन् आसीत् धृतराष्ट्रः। किन्तु कथमपि दुर्योधनः राज्यं न अवाप्नोति। यतः तस्य सेनायां प्रधानवीरः भूमावपतत्। अतः राज्यं नास्ति चेदपि दुर्योधनस्य केवलं वचनेन वा सन्तुष्टो भवतु धृतराष्ट्रः इति विचिन्त्य दुर्योधनं ''राजा'' इति अभिधीय स्वसमाचारवितरणनैपुण्यमपि प्रदर्शितवान् सञ्जायः।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।**
**आचार्यमुपसङ्गम्य राजा वचनमब्रवीत्।।**

अत्र दुर्योधनः केन सह भाषितवान्? भीष्मं सेनापतिं त्यक्त्वा द्रोणं कुतः उपससाद? इति सन्देहो भवेत्। तत्र द्रोणाचार्यः गुरुः भविष्ये सेनापतिश्च इति हेतोः द्रोणं प्रति गतवान्। तत्र भीष्मद्रोणयोः साम्यं पश्यति दुर्योधनः इति तस्य स्वभावं स्वरूपं सर्वं ज्ञात्वापि सञ्जयः ''आचार्यम् उपसङ्गम्य'' इति धतराष्ट्रं प्रति उक्तवान्।

अत्र अस्माभिः अत्यवश्यं ज्ञातव्यः अंशः एकः अस्ति। वयं कुत्रापि कार्यसङ्कल्पात् पूर्वं गुरुं प्रार्थ्य तदनु श्रीनिवासं प्रार्थयामः। यतः यः श्रीनिवासं प्रति नयति अस्मान् स गुरुः इति। अस्माकं समीपे यः अस्ति सः कीदृशः? कुतो वा आगतवान् इति शङ्कायां, स च गुरुः परमात्मानं प्रापयितुं श्रेष्ठगुरुरूपेण आगतवान् इति। परमात्मा एव स्वीयैकांशेन गुरावधितिष्ठति च। अयं विषयः कुतो वा ज्ञातः इति चेत् श्रीमद्भगवद्गीतया एव प्रथमश्लोके धृतराष्ट्रस्य प्रश्नस्य समाधानरूपेण ''आचार्यमुपसङ्गम्य'' इति सञ्जयवचनेन। अयमेव विषयः उपनिषत्सु ''गुरूपसत्तिः, गुरूपसादनम्, गुरूपगमनम्'' इत्यादिरूपेण विस्तारितः।

गुरुरेव आदौ आश्रयणीयः। तथासत्येवास्माकं तत्त्वज्ञानं भवति इति उपनिषत्सु स्पष्टतया प्रतिपादितम्। तथापि न केवलं गुरूपगमनेन। एवं सति गत्वा किं कार्यम्? इति विषयमेव उपनिषदुक्तं श्रीमद्भगवद्गीतायां अतिविस्तृतं कथयति। किन्तु दुर्योधनः तत्सर्वं न कुर्वन्नस्ति इति कारणात् एव गुरोः सकाशात् प्राप्तव्येन प्रयोजनेन वञ्चितोऽस्ति। सद्यः दुर्योधनस्य किम् आवश्यकम्, युद्धे विजयः। स च न प्राप्तः। यतोहि- न्यायेन द्रोणाचार्यं प्रति गत्वा पूज्य! अहं विजयी भवेयं चेत् किं कर्तव्यम् इति उपायं पृच्छति चेत् सविनयं प्रार्थयति चेत् द्रोणाचार्यः वदति स्म। यतः सर्वेऽपि पाण्डववीराः स्वस्य शिष्याः एव। कैः सह कथं योद्धव्यमिति बोधयति स्म। किन्तु दुर्योधनः विजयं तत्त्वज्ञानं वा न अर्थितवान् इति।

अतः एतत्सर्वं सङ्क्षेपेण वक्तुम् इदं वचनं निर्दिष्टं गीतायाम्।

(अनुवर्तते)



# व्यासपूर्णिमा

- श्री. जोषि भारद्वाजः
चरवाणी - ९९१२६५९७०७

भारतीयसंस्कृत्यां गुरोरधिष्ठानमद्वितीयमिति मन्यते। भारतेऽस्मिन् प्राचीनतमकालात् सर्वैः शिष्यैः गुरुं प्रति सादरं भक्तिः प्रदर्शिता। धौम्यशिष्य आरुणिः, द्रोणाचार्यशिष्य एकलव्यः, रामकृष्णपरमहंसशिष्यवरः विवेकानन्द इत्यादयः गुरुभक्तेः त्यागस्य च श्रेष्ठादर्शा आसन्। अतः प्रतिवर्षम् आषाढपूर्णिमायां सश्रद्धं गुरुपूजनं कर्तव्यमिति प्रचीना परम्परा।

आषाढशुद्धपूर्णिमा गुरुपर्णिमा व्यासपूर्णिमा वेति कथ्यते। श्रीव्यासोऽतीव विद्वान् सर्वश्रेष्ठ आचार्य आसीत्। पुरा किल अध्ययनार्थम् अतिविशालः एक एव वेदराशिरासीत्। किन्तु मानवानामल्पायुः परिमितसामर्थं चावलोक्य श्रीव्यासो वेदराशिं विभज्य एकैकं वेदराशिं शिष्यमेकैकम् अग्राहयद्, वेदसंरक्षणं चाकरोत्। भगवता श्रीव्यासेनानेन आदौ महाभारतं लिखितं, पश्चादष्टादश पुराणानि रचितानि। सामान्यजनानां मनः शान्त्यर्थं भारतं चापि विरचितमनेन। श्रीव्यासस्य विपुलवाङ्मयलेखनादेव 'व्यासोच्छिष्टं जगत् सर्वम्' इति प्रख्याता लोकोक्तिर्लोकेषु। व्यासमहर्षिर्विशालं लेखनविस्तारम्, अविरतं दीर्घोद्योगं, प्रगाढं पाण्डित्यं च वीक्ष्य विस्मितपण्डितास्तं 'जगद्गुरुः' इत्यमन्यन्त। पराशरस्य पुत्रोऽयं यमुनाद्वीपे जनिमलभत, बदरिकावनं च गत्वा अतपत तपः। अतोऽयं पाराशरो बादरायणो वेदव्यासः द्वैपायनश्चेत्यादिभिर्विविधैः नामभिः विख्यातः। अत एव गुरुपूर्णिमावसरे श्रीव्यासप्रतिमापूजनं, गुरुप्रतीकं ग्रन्थपूजनं चापि कुर्वन्ति। केचित् संवत्सरस्य पञ्चकृत्वः वैशाखाषाढकार्तीकपौषमाघमासेष्वपि श्रीव्यासपूजनं विदधति। अध्ययनाध्यापनकर्मणि नित्यं निमग्नेषु ज्ञानमन्दिरेष्वधुना बहवः छात्राः प्रत्यहं ज्ञानग्रहणं कुर्वन्ति। आषाढपूर्णिमावसरे तैर्विद्यार्थिभिर्भक्त्यादरेण च 'तेजस्विनावधीतमस्तु' इति संप्रार्थ्य गुरुपूजनं कर्तव्यमिति उपदिश्यते।

वेदव्यासः पाराशरः कृष्णद्वैपायनः व्यासमहर्षिः बादरायणः इत्यादिनामभिः प्रसिद्धः अस्ति। ब्रह्मसूत्राणां, महाभारतस्य, विविधपुराणानां च रचयिता श्री व्यासमहर्षिः महाभारतकाले आसीत् इति ज्ञायते। महाभारते केनचित् प्रमुखपात्ररूपेण वेदव्यासस्य परिचयः भवति। वेदव्यासमहर्षेः गुरुपर्णिमेति आषाढ मासस्य पूर्णिमादिने विशेषतः स्मरणं कुर्वन्ति।

क्रिस्तपूर्वे पञ्चमशतके महाभारतस्य रचनां श्रीवेदव्यासाः कृतवन्तः। महाभारतस्य लेखनं कर्तुं श्री गणपतिं प्रार्थितवन्तः। महाभारतं पञ्चमो वेद इति च ख्यातम्। शतसाहस्री इत्यपि महाभारतं कथयन्ति। अस्मिन् महाकाव्ये लक्षश्लोकाः सन्ति। महाभारतस्य आदिपर्वणि श्री वेदव्यासस्य चरित्रमस्ति।

श्रीपराशरमहर्षिः एकदा नदीं तरन् आसीत्। सत्यवती इति दाशकन्या तारणं कारितवती। सा दुर्गन्धिनी आसीत्। तां सुगन्धिनीं पराशरमहर्षिः कृतवान्। तयोः सम्बन्धेन एकः शिशुः अजायत । सा तु अविवाहिता इति शिशुं न स्वीकृतवती। पराशरः एव शिशुं पालितवान्। सत्यवत्यै च कन्यात्वं प्रदाय प्रेषितवान्। पराशरस्य सुतः एव वेदव्यासः। सत्यवतीसुत इत्यपि व्यासं कथयन्ति।

**जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः।**
**यस्या सकलगलितं वाङ्मयममृतं जगत् पिबति।।**

व्यासमहर्षिः वेदान् विभज्य 'व्यास' इति नाम प्राप्तवान्। वेदव्यासमहर्षिः सप्तचिरञ्जीविषु एकः अस्ति। व्यासमहर्षिः आरम्भे कुरुकुलस्य अभिवृद्ध्यर्थं धृतराष्ट्रपाण्डुराजविदुराणां जन्मनः कारणम् अभवत्। अन्ते च अश्वत्थामार्जुनयोः ब्रह्मास्त्रं शान्तं कृत्वा युध्दस्यान्तं विदधाति।

महाभारते भारतीयेतिहासस्य दर्शनं भवति। न्यायविचारः, सदाचारः, राजनीतिः इत्यादीनां सुन्दरं वर्णनं तत्र अस्ति। 'यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्' इति महाभारते सर्वमस्तीति उक्तवन्तः। अनेकत्र उत्तमोपदेशाः कृताः सन्ति, विदुरनीतिः, भगवद्गीता, अन्ते भीष्मोपदेशः इत्यादयः बहुप्रसिद्धाः मानवकल्याणाय हितकराः सन्ति। हिन्दूधर्मे ग्रन्थरत्नत्रयं अस्ति। तत्र भगवद्गीता, ब्रह्मसूत्राणि च व्यासवर्णिते एव। एतेषु ज्ञानराशिः लोककल्याणाय उपदिष्ट अस्ति। व्यासमहर्षिः उपपुराणनि च रचतिवान् इति अस्य प्रतिभामहत्वं स्पष्टं भवति।

गुरुपर्णिमा दिनाचरणे व्यासमहर्षेः गौरवेण पूजादिकं प्रचलति वेदरूपेण महाभारतादीनां चर्चाः भवन्ति। सर्वे व्यासमहर्षिं विष्णुरूपत्वेन पूजयन्ति। न केवलं गुरुः वेदव्यासः अपितु ज्ञाननामकेन स्पर्शमणिना सर्वत्र ज्ञानं प्रसारयन् लोकेषु विद्यमानं अज्ञानरूपान्धकारं दूरीकुर्वन् सर्वत्र ज्योतिरूपज्ञानं प्रसारयन् सर्वान् अन्धकारात् विमोचयति इति गुरुः श्रेष्ठः।

**अज्ञानतिमिरान्दस्य ज्ञानाञ्जनशलाकया।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।**

**गुरोः महात्म्यम्** - "गुरु" इति शब्दः संस्कृतभाषायाः। येन पारमर्थिकं तथा लौकिकं ज्ञानं उपलभ्यते सः गुरुरिति अभिधीयते। पितरौ एव अस्माकं प्रथमगुरू भवतः। यतो हि तै एव अस्मान् एतस्मिन् संसारे आनयतः तथा जीवनस्य पथि वितिवेशयतः। पश्चात् गुरुरेव भेदभावेन विना अस्माकं जीवनं सकारात्मकं कारयति तथा नकरात् अपसारयति। अस्माकं जीवने गुरोः माहात्म्यं धर्मग्रन्थेषु अतिविस्तारेण संस्कृतभाषायां उपनिबद्धं अस्ति।

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परं ब्रह्म, तस्मै श्रीगुरवे नमः।।**

**दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः**
**स्पर्शश्चेत्तत्र सानयति यदहो स्वहृतामश्मीसारम्।**
**न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरुः स्वीयशिष्ये**
**स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वाऽलौकिकोऽपि।।**

भुवनत्रये, स्वर्गे, पृथिव्यां, पातालेऽपि ज्ञानदातुः गुरोः उपमानं न लभ्यते। केचन गुरौ पारसमणेः सादृश्यं चिन्तयन्ति। तदयुक्तम्, यतो हि - तन्मणिः केवलं लोहं स्वर्णमिव कारयति न तु मणिसदृशम्। किन्तु गुरुः तथा न। स्वचरणाश्रितं शिष्यं स्वीयस्वदृशम् अधिकं करोति। अतः एव गुरोरुपमा नास्ति। सः गुरुः अलौकिकः।

**अखण्डं मण्डलाकारं व्याप्तं येन चराचरम्।**
**तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः।**

यः अखण्डः, अखिलब्रह्मण्डे यः व्याप्तः, यः चरे अचरे च स्थितः तादृशभगवतः स्वरूपं येन दर्शितं बोधितं तस्मै श्रीगुरवे नमः।।

**धर्मज्ञो धर्मकर्ता च सदा धर्मपरायणः।**
**तत्त्वेभ्यः सर्वशास्त्रार्थदेशको गुरुरुच्यते।।**

धर्मं जानातीति धर्मविषयकज्ञानवान् यः, धर्मसंबद्धकार्यकारी यः, यो धर्मपरायणः, यः सर्वशास्त्रेषु विद्यमानानां तत्त्वानां निर्देशकः सः गुरुः।

**गुरौ न प्राप्यते यत्तन्नान्यत्रापि हि लभ्यते।**
**गुरुप्रसादात् सर्वं तु प्राप्नोत्येव न संशयः।।**

यत् गुरुणा न लभते तत् अन्यत्र अन्येन केनापि मार्गेण नोपलभ्यते। गुरोः कृपया सर्वम् अपि निःसंदेहतया प्राप्यते एव।

**विद्वत्तं दक्षता शीलं सङ्क्रान्तिरनुशीलनम्।**
**शिक्षकस्य गुणाः सप्त सचेतस्त्वं प्रसन्नता।।**

ज्ञानवत्त्वं, निपुणता, विनम्रता, पुण्यात्मता, मननं, चिन्तनं सर्वदा सचेतनत्वं तथा प्रसन्नता च सप्तैतानि शिक्षकस्य लक्षणानि।।

**प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा।**
**शिक्षको बोधकश्चैव षडेते गुरवः स्मृताः।।**

यः प्रेरयति, यः सूचयति, यः तत्त्ववक्ता, यः मार्गदर्शकः, यः सन्मार्गशिक्षकः, यः ज्ञानबोधकः सः, पूर्वोक्ताः एते षड्जनाः गुरवः इति स्मृताः।

**यः समः सर्वभूतेषु विरागी गतमत्सरः।**
**जितेन्द्रियः शुचिर्दक्षः सदाचारसमन्वितः।।**

यः गुरुः भवति, सः सर्वप्राणिषु विगतरागः तथा मात्सर्यहीनः च भवति। एवं जितेन्द्रियः, पवित्रः, दीक्षाबद्धः तथा सदाचारी च भवति।।

तथा च गुरुपर्णिमादिवसे आदौ उत्थाय अस्माकं प्रथमगुरुत्वेन प्रतीयमानां मातृदेवतां पितृदेवतां च सम्पूज्य ततः गुरून् स्मृत्वा भगवदाराधनं कृत्वा भगवत्कृपासरणिं प्राप्नुमः इति।।





# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

## (कनकदासकृतिषु)


तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु

संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः

चरवाणी - ९४९४२४८३४८


''कागिनेले आदिकेशव'' इति कन्नडभाषायां अनेकानि गीतानि, ''मोहन तरङ्गिणी, नळचरित्रे, हरिभक्तिसार'' इत्यादिग्रन्थान् विरचय्य श्री कनकदासाः व्यासतीर्थानां उपदेशात् हरिदासश्रेष्ठाः बभूवुः। एते कनकदासाः यमांशसम्भूताः इति आप्तवाक्यप्रमाणात् (ता जम्भारिये कनकनु - मध्वपतिविठलदास) ज्ञायते। अस्य गीतानि ''मुण्डिगेगळु'' इति अभिधीयन्ते। ''नम्मम्म शारदे उमामहेश्वरि'' इष्टुदिन ईवेकवेकुण्ठ एष्टुदूरवो'' ''एसु कायङ्गळ कळेदु एम्भत्तुनाल्कु लक्ष जीवराशियन्नु'' ''मुट्टबेड मुट्टबेड'' ''परमपुरुष नी नेल्लिकायि'' ''भजिसि बदुकेलो मानव'' ''तल्लणिसदिरु कण्ड्य ताळुमनले'' इत्यादीनि कनकदासस्य प्रसिद्धानि गीतानि। कनकदासं स्वयं श्रीनिवास एव स्वस्य ब्रह्मोत्सवं प्रति आगन्तुं प्रहेति ऐतिह्यम्। श्रीनिवासस्य सूचनानुसारं कनकदासं सगौरवं आह्वातुं तत्कालीनः (महन्तु) देवस्थानस्य अधिकारी कनकदासमवाप्य तम् अगम्यमानः सः कनकदासं पृच्छति, को भवनिति। तदा सः कनकदासः अग्रे गन्तृणाम् अनुचरः, अनन्तरम् आगन्तृणाम् अग्रगामी इति प्राह। निराडम्बरः, गर्वरहितः, उदारमनस्कः एषः भगवन्तं ध्यायन् तिरुमलं प्राप्य शीतात् कम्पमानः सन् बुभुक्षां असहमानः तिमिरे स्थिते सति तदा एकः आजानबाहुः प्रसादं तथा आच्छादनार्थं पीताम्बरं च दत्तवानिति वदन्ति। कनकदासानां भक्त्या सन्तुष्टः उडुपी श्रीकृष्णः पश्चिमाभिमुखो अभूदिति ऐतिह्यम्। एभिः प्रगीतं लालिगीताम् अत्यन्तं प्रसिद्धम्। तं गीतं देवालयेषु ऊञ्जल्सेवावेलायां गायन्ति। पञ्चचरणात्मकस्य अस्य गीतस्य पल्लविः

लालि पावन चरण लालि अघहरण।<br>
लालि वेङ्कटरमण ललित कल्याण।।<br>
नरमृगाकारि हिरण्यकन वैरि।<br>
करिराजरक्षक कारुण्यमूर्ति।<br>
हरि आदि केशव गुरु अप्रमेय।<br>
सिरिधर शेषगिरि वर तिम्मराय।।

कनकदासेन रचितासु कृतिषु व्याजनिन्दास्तुतिसम्बद्धं ''बन्देवय्य गोविन्द शेट्टि' इति गीतमपि सुप्रसिद्धम्। ''एनेन्दु कोण्डाडि स्तुतिसलो देव'' इति कीर्तने ''तिरुपतिय वास श्रीवेङ्कटेशनु नीनु, स्मरिसि निन्नयनाम बदुकुवनु नानु। बिरुदुळ्ळवनु नीनु, मोरेहोक्कुवनु नानु, सिरियादिकेशवने नीनु''। कथं त्वां स्तोमि, तिरुपतिपुरवासः भवान् श्रीनिवासः, त्वां स्मरन् जीवमानः अहम् इति स्तौति। ''मुट्टबेड'' इति कीर्तने ''सिरिराम मन्त्र सदा जपिसुत मोददलि। तिरुपति यात्रेय माडुव महात्मर मुट्टबेड'' राममन्त्रजपं, तिरुपतियात्रां च ये कुर्वन्ति तान् मा स्पृशतु इति यमः आज्ञापितवानिति वदन्ति।

(अनुवर्तते)

# वचनं शीलमाख्याति

- श्री वि.प्रदीपाचार्यः
चरवाणी - ९४९१६४६५३२



अथैकदा कश्चिद्राजा दण्डकारण्यं सपरिवारं मृगयार्थं गतवान् आसीत्। वन्यसत्वम् अनुसरन् स राजा सहचरेभ्योऽमात्यादिभ्यो दूरम् अगच्छत्। ततस्ते सर्वे राजनम् अन्वेष्टुम् इतस्ततः अभ्रमन्। अरण्यमध्ये एकस्मिन् उटजे कश्चान अन्धः साधुः न्यवसत्। राजानमन्वेष्टुं प्रधानामात्येन प्रेषितः कोऽपि सैनिकः तत्र प्राप्तः। वृक्षतले उपविष्टम् अन्धसाधुं दृष्ट्वा सगर्वम् अवदत् सः ''रे अन्ध! अपि आगतः अस्माकं राजा अत्र?'' इति। तदाकर्ण्य साधुः उवाच 'अन्धः अहम्। न द्रष्टुं समर्थः अस्मि' इति। 'जाने त्वम् अन्धोऽसि। तथापि न बधिरः। अश्वस्य पदरवाः अपि न श्रुताः त्वया' इति सोत्प्रासम् उक्तं तेन। साधोः न इति प्रत्युत्तरं श्रुत्वा दुर्वचनानि भाषमाणः स निर्गतः तस्मात् स्थानात्।

अत्रान्तरे सेनापतिः तत्र उपस्थितः। भो साधो! अप्यस्माकं नृपतिः आगतोऽत्र?'' इति पृष्टे सति 'न नृपतिरागतः परम् एकः सैनिकः राजानम् अन्विष्यन् उत्तरां दिशम् अगच्छत्' इति उक्तवान् सः। ततश्चा सेनापतिः अन्यत्र अन्वेषणार्थं निरगच्छत्। अनन्तरं स्वयं प्रधानामात्यः तत्र आगत्य रथात् अवतीर्य च सविनयं साधुम् अपृच्छत् ''भोः साधुवर!, वय राज्ञा सह अस्मिन् दुर्गमवने मृगयार्थम् आगताः। परं दुर्भाग्येण अस्मत् वियुक्तः महाराजः। अपि जानाति भवान् किञ्चित् अस्मिन्विषये?'' 'भद्र! न किमपि जानामि' इति श्रुत्वा प्रधानामात्योऽन्यत्र निरगच्छत्।

अनन्तरम् अल्पकालेन परिश्रान्तो राजा तत्र उपस्थितः, यत्र स साधुरुपविष्टः। कृताञ्जलिना भणितं राज्ञा भगवन्, तृषार्तः अहम्, किञ्चित् जलमिच्छामि पातुम्''। तदा स अवदत् 'राजन् स्वागतं ते। परिश्रान्तो लक्ष्यसे। अतो न सहसा जलं पेयम्। कन्दमूलफलानि भुक्त्वा जलप्राशनं कर्तव्यम्'। तदा सविस्मयं राज्ञा पृष्टम् 'ननु नेत्रहीनेन भवता अहं राजा इति कथं विज्ञातम्। कश्चिादागतोऽत्र माम् अन्वेष्टुम्?' इति। तत् श्रुत्वा विहस्य अब्रवीत् सः 'प्रथमं सैनिको भवन्तमन्वेष्टुम् आगतः। तत्पश्चाात् सेनापतिः। तदनन्तरं प्रधानामात्यः। अधुना भवानत्र उपस्थितः इति।

तदा राजा पप्रच्छ, 'तेषाम् अधिकारपदानि अपि कथम् अभिज्ञातानि'। साधुः प्रत्यवदत्, 'तैः प्रयुक्तैः शब्दविशेषैः। सैनिकः मां 'रे अन्ध' इति सम्बोधितवान्। सेनापतिना 'भोः साधो' इति उक्तम्। प्रधानामात्यः सादरं 'साधुवर' इति अब्रवीत्। भवता सप्रणामं 'भगवन्' इति गौरवपदं प्रयुक्तम्। राजन् आदरान्वितवचांसि शीलश्रेष्ठतां द्योतयन्ति इति। तदाकर्ण्य संतुष्टो राजा 'धन्यः खलु भवान्, यः शब्दमात्रेण शीलं परीक्षते' इत्युक्त्वा तं मुनिवरं प्रणम्य स्वनगरं प्रतिनिवृत्तः।

नीतिः :- केवलं वचनेनैव शीलं गृहणन्ति सज्ञनाः।
केवलं वचनेनैव क्रोधं यान्ति च दुर्जनाः।।






तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
संस्कृतानुवादः - कुमारी टि.हरिप्रिया
चित्राणि - श्री के.तुलसीप्रसादः

धीवराणां राजा दाशराजः। तस्य पालितपुत्री मत्स्यगन्धा आसीत्। यमुनानद्यां नौकया जनानां नदीतारणं तस्य वृत्तिः। एकस्मिन् दिने.....

वृद्धः अभवं खलु! नौकाचालने अशक्तःभवामि।




मां किमपि न ज्ञायते।

तर्हि अहं नौकां चालयानि वा?

भवती चालयिष्यति वा? अस्तु। धर्मेण चालनीयम्

अस्तु तात!



अग्रिमदिनात् मत्स्यगन्धा नौकां चालयति। एकदा पराशरमहर्षिः नौकाम् आरुह्य...

दाशराजस्य पुत्री वा? नाम किम्?

आम्! मम नाम मत्स्यगन्धा।

अहं पराशरमहर्षिः। तीर्थयात्रार्थं गच्छामि।

जानामि, भवान् महान् जनः।

भवत्याम् इच्छुकः अस्मि। दिव्यज्ञानेन भवत्याः विषये सर्वं ज्ञातवान्

सम्यक् चिन्तयतु महर्षे!

अद्भुतसमयोऽयम्। आवयोः पुत्रः जायते चेत् आदिगुरुः भविष्यति।


मत्स्यगन्धा सम्यक् अचिन्तयत्। सम्यक् विचार्य उत्तमं निर्णयं स्वीकृतवती। महर्षिं वरद्वयम् अयाचत। यदि वरद्वयं दास्यति तदा भवदीयकामानापूर्तिम् अवश्यं करिष्यामि इति अवदत्।
महर्षे! मम शरीरं मत्स्यदुगन्धयुक्तम् अस्ति।भवान् सोढुं शक्नोति वा?
अद्यतनात् भवत्याः शरीरात् मत्स्यदुर्गन्धः दूरीभूत्वा सुगन्धः योजनपर्यन्तं व्याप्स्यते। भवत्याः नाम मत्स्यगन्धा न, योजनगन्धा। इदमेव मम वरम्।
महर्षे! अहम् कुमारी एव भवेयम्।
भविष्यति। इदं मम द्वितीयवरम्।
महर्षेः अनुग्रहात् योजनगन्धा नौकां दिव्यतेजोयुते एकस्मिन् द्वीपे तीरं प्रापयति।
तपश्चरणाय उत्तमप्रदेशः
लोककल्याणाय तयोः परशरमत्स्यगन्धयोः सकाशात् यौवनेन युक्तः महर्षिः व्यासः अजायत।
वेदान् विभज्य, पुराणादीनि विलिख्य च लोकोपकारकः अयं महर्षिः वेदव्यासः आदिगुरुः बभूव। श्री गुरवे नमः।
अम्बे! नमस्कारः तपस्यार्थं गच्छामि।
शुभमस्तु पुत्र!
अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

# रसप्रश्नाः

१. रावणाज्ञानुसारं कः मायामृगरूपेण सीतापार्श्वे गतवान्?
अ. सुबाहुः आ. कुम्भकर्णः
इ. शूर्पणखा ई. मारीचः

२. लवणासुरं कः मरितवान्?
अ. रामः आ.लक्ष्मणः
इ. भरतः ई. शत्रुघ्नः

३. कबन्धासुरस्य अपरं नाम किम?
अ. दनुः आ. मातङ्गः
इ. स्थूलशिरः ई. शुकः

४. लक्ष्मणस्य पत्नी काः?
अ. माण्डवी आ. सुमती
इ. श्रुतकीर्ती ई. ऊर्मिला

५. विश्वकर्मणः पूत्री काः?
अ. चित्राङ्गदा आ. विश्वची
इ. शुक्तिमती ई. ताम्रा

६. कस्याः नद्याः भगीरथी इति नाम?
अ. यमुना आ. गङ्गा
इ. कावेरी ई. कालिन्दी

७. जयद्रथस्य पत्नी का?
अ. क्षमा आ.सरस्वती
इ. दुःश्शला ई. ममता

८.कलहप्रियः इति प्रसिद्ध कः?
अ. नारदः आ.दुर्वास
इ. विश्वामित्रः ई. परशुरामः

९. रावणपुत्रः इन्द्रजित् केन मारितः?
अ.रामेण आ.हयग्रीवेण
इ. लक्ष्मणेन ई. हनुमता

१०. लङ्कायां सीता कुत्र निवसिता?
अ.चित्रकुटे आ.पञ्चवट्यां
इ. दण्डकारण्ये ई. अशोकवने

समाधानानि - १.ई २.ई ३.अ ४.ई ५.अ ६.आ ७.इ ८.अ ९.इ १०.ई

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?



Edited and Published on behalf of Tirumala Tirupati Devasthanams by Prof. K.Rajagopalan, Publisher and Chief Editor, T.T.D, and Printed at Tirumala Tirupati Devasthanams Press by Sri. P.Ramaraju, Special Officer (Press & Publications), T.T.D, Tirupati - 517 507.





तिरुमलक्षेत्रे आकाशगङ्गातीर्थसन्निधौ प्रप्रथमवारम्
आचरितहनुमज्जयन्त्युत्सवाः (२०२१, जून् - ०४)



२०.०६.२०२१ दिनाङ्के तिरुमलक्षेत्रे स्वामिनः वसन्तमण्टपे
आचरितविष्णुसहस्रनामार्चनकार्यक्रमे
अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महोदयाः ।

